# गुरुवन्दनम्



गुरुसहस्रावधानी

डा. कडिमिल्ल वरप्रसादः

# कृति समर्पणम्

श्री श्री श्री वेदुरुपाक ग्राम निवासिने, वेदुरुपाक गाड् नाम्रा विख्याताय, विजयदुर्गा पीठाधिपतये, साक्षात् श्रीमातृ स्वरूपाय वाड्रेवु वंश संजाताय, सुब्रह्मण्याय सद्गुरवे, सभक्तिकम्, सप्रश्रयम्, समर्प्यते इयं कृतिः गुरुवन्दनम्।



श्री श्री श्री वाड्रेवु सुब्रह्मण्य गुरुदेवः
विजयदुर्गा पीठाधिपतिः
वेदुरुपाक
प्राग्गोदावरी मंडलम्

वाड्रेवु वंश वाराशौ जातोऽयं गुरु चन्द्रमाः
सुब्रह्मण्यो महातेजाः कृतिस्तस्मै प्रदीयते॥

# गुरुवन्दनम्

# గురు వన్దనమ్

गुरु सहस्रावधानी

डा. कडिमिल्ल वरप्रसादः

గురు సహస్రావధానీ

కడిమిళ్ళ వరప్రసాదః

**GURU VANDANAM** Sanskrit Poetry

*Author :*

Guru Sahasravadhani
**Dr Kadimilla Vara Prasad**

Copies. 1000

Published Year. 2010

Price. Rs. 25/-

Copies can be had from
Kadimilla Ramesh
3-6-50. Yarramilli Vari Street
Narsapur. 534275
W.G.Dt. A.P
cell. 9247879606

Printed by
*Creative Services*
Opp.SBI, Steamer Road
NARSAPUR - 534275, W.G.Dt.
Tel. 08814-273113

# आशीः पीठिका

राष्ट्रपति पुरस्कार ग्रहीता
आचार्यः कोम्पेल्ल रामसूर्यनारायणः
साहित्यविभागः
राष्ट्रियसंस्कृतविश्वविद्यालयः
तिरुपतिः

परमपावनायाः गौतम्याः एकस्याः शाखायाः तटभुवि एडिदग्रामे जनिं लब्ध्वा अपरस्याः शाखायाः तटभुवि पोडगट्लपल्लिग्रामे अधीत्य तस्या एव शाखायाः समुद्रसमीपवर्तिन्याः अपरस्यां तटभुवि नरसापुरे जीविकां प्राप्य जीवनं यापयन् वामनरूपेण कविताप्रस्थनमारभ्य त्रिविक्रमरूपेण पराक्रम्य विशाले अस्मिन् विश्वे स्वीयकविताविलासविशेषैः सहृदयानां मनांसि रंजयन् बहूनां हृदयेषु कवितानुरक्तिं जनयन् विराजमानो ऽयं वरप्रसादः साहित्यलोके सुप्रसिद्धः। एनमजानानः साहित्योपासकः कश्चिदपि नास्तीति नातिशयोक्तिः। अद्यतनकाले आन्ध्रदेशे रसज्ञानां भाग्यवशात् पञ्चषाः सहस्रावधानिनो विलसन्ति । तेषाम्मध्ये महाभागस्य महद् यशोऽस्ति यत् द्वौ शिष्यौ सहस्रावधानिनौ अपरौ द्वौ शिष्यौ शतावधानिनौ बहूनष्टावधानिनश्च अनेक पद्यकवीन् कवयित्री द्वयंच निरमासीत् इति सर्वदा गुरोर्द्विविधेन कौशलेन विद्योतते कविरयम् .. यथा कालिदासेनोक्तम्

श्लो।। शिष्टा क्रिया कस्यचिदात्मसंस्था
संक्रान्तिरन्यस्य विशेषयुक्ता।
यस्योभयं साधु स शिक्षकाणां
धुरि प्रतिष्ठापयितिव्य एव ।। इति ।।

अयं अपूर्वं युगल सहस्रावधानमपि अकरोत् स्वशिष्येण सह। नहि युगलावधानान्यपि साामान्यानि। किन्तु...

> మాడకు మాడ ఎత్తుగల మాటలు నేరిచి, సత్కవిత్వమే
> మీడుగ జోడుగా చెవులకింపుగ జెప్పగ నేర్చినాము మా
> చూడనివారు లేరు మము జూడనివారును లేరు

इति श्रेण्यां पतन्ति। तादृशस्य महाभागस्य हृदयात् विनिर्गतमिदं गुरुवन्दनं पठितृजनकरकमलानि अलंकर्तुमुत्सुकं वर्तते।

पितृभक्तेः गुरुभक्तेः शिष्यवत्सलतायाश्च अयं जनः प्रयागः। अस्य मुखारविन्दादुद्गतमिदं गुरुवन्दनं सुसंस्कृतानुभूतेः गीर्वाणवाणीसंशोभितमाविष्करणमेव। भारतदेशीयस्य जनस्य सर्वस्य गुरुपदस्मरणेन अक्ष्णोरग्रे प्राचीनभारतदेशस्य पावनं स्वरूपमाविर्भवति। अटवीषु गुरुकुलेषु, पर्णशालासु, वृक्षाधस्तलेषु, ब्रह्मवर्चसिनाम् अध्ययनाध्यापनादिरूपं तपः कुर्वाणानां गुरूणामग्रे उपविश्य वेदान् शास्त्राणि अधीयानाः ब्रह्मचारिणः मनोदर्पणे स्फुरन्ति। अविच्छिन्नाः गुरुशिष्यपरंपराः अनेकाः अस्मिन्देशे निरन्तरं सरन्ति। तादृशपरम्परायामंशो भूत्वा स्वीयं जन्म सार्थकयितुमवकाशः सर्वस्यापि न लभ्यते।

स्पर्शवेधिनं सर्वे जानन्ति तेलुगुभाषायां परुसवेदीत्युच्यते। सर्वे तं लब्धुमिच्छन्ति तदपेक्षयापि गुरुर्महान्। स्पर्शवेधी अयः काञ्चनयति। गुरुरपि अयस्सदृशं जडं शिष्यं काञ्चनयति। स्पर्शवेधी समीपस्थं स्पृष्ट्वैव काञ्चनयितुं प्रभवति। न दूरस्थमयः, न वा समीपस्थमपि अस्पृष्ट्वा। गुरुस्तु दूरस्थमपि शिष्यं स्मरणमात्रेण काञ्चनयितुं समर्थो

भवति । अतः समीपस्थमस्पृष्ट्वापि अनुग्रहीतुं शक्नोतीति न विविच्य वक्तव्यतामर्हति खलु । स्पर्शवेधिना काञ्चनीकृतमयः न स्पर्शवेधी भवति, नाम स्वीयस्पर्शेन अन्यदयः काञ्चनयितुं न प्रभवति । गुरुरूपेण स्पर्शवेधिना काञ्चनीकृतः शिष्यः स्वयं गुरुरूपस्पर्शवेधी भूत्वा अन्यदयः अपि काञ्चनयितुं प्रभवति । काञ्चनस्य मूल्यमपितु लौकिकं भवति न पारमार्थिकम् , गुरुकटाक्षवीक्षितस्य शिष्यस्य पारमार्थिकमपि मूल्यमस्ति, नाम स शिष्यः स्वाश्रितेभ्यः परमार्थशीलम् अन्ततो गत्वा मोक्षपथमपि दातुं शक्तो भवति, तदुक्तम् ...

श्लो ।। दृष्टान्तो नैव दृष्टः त्रिभुवनजठरे सद्गुरो र्ज्ञानदातुः
स्पर्शश्चेत्तत्र कल्प्यस्स नयति यदहो स्वर्णतामश्मसारम्
न स्पर्शत्वं तथापि श्रितचरणयुगे सद्गुरुः स्वीयशिष्ये
स्वीयं साम्यं विधत्ते भवति निरुपमस्तेन चालौकिको ऽपि ।।

लोके कति शिला न सन्ति? कतिचन उपयुज्यन्ते आसन्दरूपेण, कतिचन विनियुज्यन्ते तल्परूपेण, कतिचन कुट्टिमरूपेण, कतिचन पादपीठरूपेण, कतिचन इतोऽपि अधस्तरीयोपकरणरूपेण विनियुज्यमानाः तिरस्क्रियमाणाः दृश्यनत एव । एवं स्थिते महाशिल्पिना स्वीकृताः, तस्य टङ्कप्रहारान् उपभुक्तवत्यः शिलाः देवताशिल्पानि भूत्वा देवालयेषु पूजादिकं प्राप्नुवानाः विराजन्ते । सर्वैः भक्तिभावेन स्मर्यन्ते । तथैव जनानां मध्ये ये महद्भिः गुरुभिः स्वीकृताः तेषां अनुशासनमनुभूतवन्तः ते सर्वत्र पूज्यन्ते । महाशिल्पी पाषाणं देवतां करोति, गुरुः जडं शिष्यं जगत्पूज्यं करोति ।एतत्सर्वं मनसि निधाय कविरयं कवितारूपेण आविष्किरोति गुरुमहत्वं गुरुवन्दनमिति नाम्ना ।

संस्कृतान्ध्रयोः अनल्पं पाण्डित्यं समुपार्ज्य आन्ध्रकविता वधानोपन्यासेषु अखण्डां कीर्तिं सम्पाद्य गीर्वाणवाण्यामपि स्वलेखिनीं प्रवर्तयन्नयं धन्यवादार्हो भवति । स्वीयहृदयान्तर्वर्तिन्याः प्रगाढायाः गुरुभक्तेः यानि यशःप्रदानि फलानि तान्यनुभूय स्वीयानुभूतिं समाजोपयोगाय प्रकटयत्ययमवधानी । समाजस्य सन्मार्गोपदेशः कवितायाः प्रधानं फलं भवति । मृदुमधुरया भाषया उपदिशति । अक्लिष्टान् भावान्विशदयति। सरलेन अनुष्टुप्छन्दसा स्वीयभक्तिमाविष्करोति । आन्ध्रकवीनां संप्रदायमनुसृत्य कृतिं श्रीकारेण आरभते । उपमालंकारैः, परंपरित रूपकैः, व्यतिरेकालंकारैः स्ववचांसि विभूष्य, समर्पयति पश्यत ।

गुरुजैवातृकज्योत्स्ना पाति शिष्यचकोरकम्
शान्ततृष्णेनचानेन न त्याज्या हि कृतज्ञता ॥

गुरुकल्पकमाश्रित्य लब्ध्वा ज्ञानात्मकं सुमम्
तत्सुगन्धं समाघ्राय न कुर्याद् द्रुमकर्तनम् ॥

इत्यादिषु परम्परितरूपकवैभवम् ।

रत्नानि संति वाराशौ यादांसि भयदानिच
गुरुरत्नाकरो नूनं कदापि न भयंकरः ॥

इत्यादिषु व्यतिरेकालंकारसम्पदम् ।

अपृथग्यत्नेन समागतम् श्लेषमपि पश्यत ।

चन्द्रोऽपि चन्द्रिकादाने पक्षपातगुणान्वितः
निरतं गुरुचन्द्रेण दीयते ज्ञानचन्द्रिका ॥

गुरुवन्दनरूपः अयं कविता खण्डः लोकान् सन्मार्गे प्रवर्तयितुं पर्याप्तशक्तिः भवतीति विश्वसिमि । एतदध्ययनेन गुरुद्वेषिणां हृदयात् द्वेषः अवश्यमपसरिष्यति । गुरुभक्तिरहितानां हृदयेषु तद्भक्तिरुत्पत्स्यते। भक्तिमतां भक्तिः वर्धिष्यते सकलानि श्रेयांसि दास्यति च ।

आन्ध्रभाषायां बहूनि काव्यानि प्रवाहयन्ती अस्य अवधानिकवेः लेखिनी गीर्वाणवाण्यामपि अनेकानि विदुषः रञ्जयितुं समर्थानि आध्रुवतारककीर्तिमन्ति काव्यानि आविर्भविष्यतीति दृढं विश्वसिमि । आयुरारोग्यभाग्यैः सपरिवारममुं वर्धयतु भगवान् श्रीनिवासः इति प्रार्थयन् विरमामि ।

एवम्
कोम्पेल्ल रामसूर्यनारायणः



# I AM THANKFUL TO

Sri Sri Sri Vadravu Subrahmanyam ( Veduru paka God)
Vijaya Durga Peethadhipati — Veduru paka

Sri Visvanatha Gopala Krishna — Rajahmundry

Sri Kompella Stya Narayana — Kovvuru

Prof. Kompella Rama Surya Narayana — Tirupati

Inglish Translator... Dr C. Jacob
Retd District Judge — Narsapur

Creative Press — Narsapur

My all teachers and well wishers

– Kadimilla Vara Prasad

१. श्रीदात्री शुभदात्रीच सर्वत्र विजय प्रदा
विद्या सा येन मे दत्ता तस्मै श्रीगुरवे नमः

२. सारस्वतेन लोको ऽयम् चैतन्यमधिगच्छति
तद्धनं येन मे दत्तम् तस्मै श्रीगुरवे नमः

३. पावनं कविताराज्यम् भाषयो स्संस्कृतान्ध्रयोः
दयया येन मे दत्तग् तस्मै श्रीगुरवे नमः

४. कविता पूज्यते लोके निर्मला रसवर्धिनी
दत्ता सा कृपया येन तस्मै श्रीगुरवे नमः

५. पद्यमन्दारसम्पूर्णम् कवनं नन्दनं वनम्
प्राञ्चितं येन मे दत्तम् तस्मै श्रीगुरवे नमः

६. अवधानकलारङ्गे सुस्थितिर्येन साधिता
तस्य पादाम्बुजद्वन्द्वम् प्रणमामि निरन्तरम्

७. अष्टधा शतधाचैव तथैव च सहस्रधा
येनावधानिता प्राप्ता तस्मै श्रीगुरवे नमः

८. पाण्डित्यवैभवं बुद्धौ वक्तृत्वं रसनाञ्चले
कवित्वं मम हृद्देशे वर्तन्ते कृपया गुरोः

९. गुरुणा जायते ज्ञानम् येन लब्धं महद् यशः
प्रत्यक्षं च परोक्षं च करोमि गुरुभावनाम्

१०. शिष्यमानसकेदारे सस्यवर्धन कारकम्
कृषीवलम् गुरुम् विद्या न्नकुर्याद् गुरुदूषणम्

1. My master who bestowed on me education that grants me gifts, fortunes and all kinds of victories, I salute.

2. The world is being activated only by literature. the master who granted me such wealth of all literature, I salute.

3. The Master who graciously granted me the heavenly domain of poetry both in Sanskrit and Telugu languages, I salute.

4. Poetry is receiving tributes by all in the world. Poetry is so pure. It gives aesthetic pleasure. The master who has granted me such poetic power, I salute.

5. The master who has bestowed on me the beautiful poetic garden filled with the AMARNATH(divine) flowers and praised by one and all, I salute.

6. I always offer my prayers to the golden feet of my master, an embodiment of wisdom, I with whose grace my talent of memorization and recitation have improved.

7. By whom I have learnt the art of ASTAVADHANA, SATAVADHANA and SAHSRAVADHANA (to hear, remember and reproduce, eight, hundred and thousand items at a time) such a master, I salute

8. The intellectual grandeur of scholarship, the art of speech and the poetic talent imbedded in my heart are prospering with the blessings of my master.

9. Knowledge comes from the teacher. Fame comes from knowledge. Therefore expressly or tacitly I always contemplate on my master

10. The labourer who raises crops in the mind of a disciple, as in a field, is the teacher.

११. पितरौ जन्मदातारौ ज्ञानदाता हि देशिकः
जीविका तत्कृपा लब्धा न कुर्याद् गुरुदूषणम्

१२. आदौ गुरुं नमस्कृत्य कुर्याद्दैवार्चनं ततः
गुरुं हित्वा कृताम् पूजाम् न स्वीकुर्वन्ति देवताः

१३. अज्ञानसर्पदष्टाय गुरु स्सञ्जीवनौषधम्
ददाति ज्ञानरूपेण तस्मिन् कार्या कृतज्ञता

१४. यान्त्रिके खलु संसारे सागरे पतितं नरम्
प्रोद्धर्तुं शक्त आचार्यो गुरुदेवं न विस्मरेत्

१५. गुरुजैवातृकज्योत्स्ना पाति शिष्यचकोरकम्
शान्ततृष्णेनचानेन न त्याज्या हि कृतज्ञता

१६. गुरुकल्पकमाश्रित्य लब्ध्वा ज्ञानात्मकं सुमम्
तत्सुगन्धं समाघ्राय न कुर्याद् द्रुमकर्तनम्

१७. आचार्यसहकारेण वर्धन्ते च्छात्रकोकिलाः
गानं लब्ध्वा यशः प्राप्य तद्रसालं न विस्मरेत्

१८. ज्ञानाकाशविहारी हि गुरुमेघो ऽभिवर्षति
सत्पात्रे शिष्यकेदारे स्मरेन्नित्यं गुरुं घनम्

१९. सर्वेष्वपिच कालेषु सर्वावस्थासु सर्वधा
कृपा हि गुरु देवस्य स्थिता भवति रक्षणे

२०. अव्यवस्था भवत्येव कूलम् छित्वा प्रवाहिनी
शिष्य जीवन सर्वस्वम् गुरुकूलाभि रक्षणम्

11. Parents give birth, the teacher transmits, knowledge. The way to earn one's living is also shown by the teacher. Therefore, none should speak ill of his teacher.

12. One should pay his salutations to his master first.Then he should offer his prayers to his divinities.Prayers offered ignoring the teacher will never reach the gods.

13. The master administers the medicine in the form of knowledge for survival to him who is bitten by the serpent of ignorance. For that, man should remain grateful to his master.

14. The power to salvage the man who is being drifted away in the ocean of the mechanical life is the master only. Hence none should forget his master.

15. The thirst of the disciple called Chakora bird can be quenched by the rays that emit from the moon. So the disciple after quenching his thirst for knowledge should remain thankful to his master.

16. Having resorted to the master equal to the Heavenly tree that grants every wish , received the flower of knowledge, breathed in its scented smell of knowledge, one should not cut down the tree afterwards.

17. The disciples like cuckoos, taking refuge in the master similar to a mango tree to flourish. After they acquire their skills in singing and in fame, they should not ignore their master.

18. The master floating like a cloud in the sky of knowledge rains in the field called the disciple. Therefore the disciple should ever contemplate upon his master.

19. At all the stages of life (childhood, boyhood, manhood and old age) and in all seasons it is the benevolence of the master only that saves us.

20. The water that breaks the bank of the river and flows without a direction, becomes useless. Similarly the river of life of the disciple is protected by its banks namely the master.

२१. सर्वेष्वपिच देशेषु नदी कूलाभिरक्षिता
गुरुकूलं तिरस्कृत्य ह्यगम्यं शिष्यजीवनम्

२२. दत्ता येनाक्षरा विद्या तस्मै वन्दनमाचरेत्
गुरोराशीर्बलेनैव प्राप्नोति विजयं नरः

२३. अभिषेको ह्यलङ्कारो हराय हरये तथा
भास्कराय नमस्कारो गुरवे तु कृतज्ञता

२४. वृक्षः पादबलेनैव ददाति मधुरं फलम्
पादमूलम् तरुं विद्याद् गुरुमूलं मनीषिणम्

२५. दिवा कान्तिं ददात्यर्को रात्रिभागे तु चन्द्रमा
अहोरात्रम् ज्ञानकान्ति र्दीयते गुरुणैव हि

२६. अतिवृष्टिरनावृष्टि र्दृश्यते घनमण्डले
कालवृष्ट्या शिष्यलोकम् पुनाति हि घनो गुरुः

२७. रत्नानि सन्ति वाराशौ यादांसि भयदानि च
गुरूरत्नाकरो नूनं कदापि न भयंकरः

२८. क्षमाविष्टापि भूदेवी कम्पते हि तदा तदा
आचार्यस्य कृपाभूमौ कम्पनं न विजायते

२९. चन्द्रो ऽपि चन्द्रिकादाने पक्षपातगुणान्वितः
निरतं गुरुचन्द्रेण दीयते ज्ञानचन्द्रिका

३०. प्राणेभ्यो ऽपि गरीयांसो गुरोश्शिष्या न संशयः
शुक्राचार्य स्स्वशिष्याय साहसं कृतवान् खलु

21. The banks of river in any country safe-guard the river. He who defies his master who stands as his banks, his life turns aimless.

22. The master who imparts lasting knowledge from the stage of alphabets should be ever respected. With the strength of the blessings of the master man is able to succeed.

23. Just as anointment to Siva, ornaments to Vishnu and salutations to the Sun are important. Like that gratitude to the teacher.

24. The tree is able to yield delicious fruits by reason of its strong roots. Likewise it should be realized that the basis for the intellect of a thinker his master.

25. The sun shines only during day time and moon during nights. But the teacher only that dissemilates the light of knowledge day and night, at all times.

26. In the cloudy sky there my be heavy or light rain. But in the case of a master alias cloud, rains in due time, to the extent necessary and purifies his world of disciples.

27. There will be gems in the sea. Along with them there will be dangerous monsters. But a master ever remains a giver of gems to his disciples and never is frightful.

28. The other name for forbearance is the mother-earth. Still it quakes now and then. But in the case of the kindly land of the master will never be such vibrations or shakes.

29. The moon is biased in shedding its light. It shines bright in the solar period and fails to shine in the lunar period. But the moon - like master emits bright light of knowledge for his disciples endlessly.

30. For a master his disciples are more than life there is no doubt about it. Did not Sukracharya venture and give up his life in order to save his disciple Kacha!

३१. त्रयीतुल्यम् गुरोर्वाक्यम् त्रयीवेद्यसमो गुरुः
गुरुदूषणपापस्य प्रायश्चित्तं न विद्यते

३२. गुरुदेवनमस्कार श्शतयज्ञफलप्रदः
गुरुदेवतिरस्कारः कोटि यज्ञ फलापहः

३३. लालितो ऽपि च यशिशष्यो दारुणं द्वेष्टि तद्गुरुम्
स नरः पन्नगप्रायः पयःपायी विषप्रदः

३४. गुरौ कृतघ्नता येन दर्शिता पापकर्मणा
पूर्वजन्मार्जितं पुण्यं सर्वं तस्य विनश्यति

३५. गुरुः कुप्यति चेच्छिष्य आशीरिति विचिन्तयेत्
प्रतिनिन्दा न कर्तव्या शिष्येणोत्तमचेतसा

३६. हरेरपि गुरुर्मुख्यो हरादपि गुरुर्वरः
तावुभौ गुरुणा ज्ञेयौ गुरुस्सर्वाधिको मतः

३७. अशक्ता मानवा द्रष्टुम् तेजेरूपाम् सरस्वतीम्
तामेव मानवाकाराम् गुरौ दृष्ट्वा समर्चयेत्

३८. दैवे कृतापराधश्चेद् गुरुर्भवति रक्षकः
गुरौ कृतापराधश्चेन्न शक्तः को ऽपि रक्षितुम्

३९. वन्दे गुरुपदद्वन्द्वम् निर्द्वन्द्वामृतदायिनम्
विज्ञानवर्धनम् नित्यं दैवसायुज्य कारणम्

४०. कविता गुरुणा दत्ता भाषयोस्संस्कृतानध्रयोः
विज्ञानं च गुरोर्भिक्षा गुरुपादं भजाम्यहम्

31. The word of the master is equal to the Vedas. He through him in fact God is revealed is equal to God. If anybody ridicules him, there will be no redemption for his sin.

32. Saluting the master brings in the fruits equivalent to performing hundred YAJNAS(sacrificial offerings). But defiance of the master devastates the blisses obtained by doing hundred million YAJNAS..

33. If the disciple who is cajoled and lulled by his master turns round and abhors his master can be compared to a snake that drinks milk but omits poison.

34. That wicked man who shows ingratitude towards his master, all the virtues he inherited from his past life would die out.

35. A worthy disciple should take his master angering on him for what ever reason, as a blessing but he should not retaliate.

36. The master is more important than lord Kesava.He is worthier than lord SIVA. Both of them are sure tobe known through the master. Thus the master is the Supreme.

37. Man cannot look into the dazzling face of the goddess of knowledge namely Saraswati deliberately. Therefore he should see Her replica in the master in human and worship him.

38. If a man sins against God, the mastercan save him. But if he sins against his master none can save him.

39. Let me salute both the feet of the master who serves with nectar unparalleled and improves our knowledge and who is instrumental in man merging with God.

40. The talent of writing poetry in Sanskrit and Telugu has been granted to me by the master. All the knowledge I have acquired is but by the grace of master. Hence I worship his feet.

४१. ज्ञानदीपप्रदातारम् गुरुं नत्वा श्रियं व्रजेत्
दीपं च दीपदं हित्वा ह्यनर्थमधिगच्छति

४२. संस्कारो येन मे दत्तो दत्ता च कविता घना
दत्तं च येन पाण्डित्यम् तं गुरुं प्रणमाम्यहम्

४३. दुष्टराक्षससंहारे वज्री भवति वासवः
तमांसि शिष्यलोकस्य द्यति ज्ञानासिना गुरुः

४४. दुष्टा शिशष्याः प्रवर्तन्ते गुरौ दौष्ट्यं न वर्तते
स्वतनुच्छेदकस्यापि शीततां कल्पते द्रुमः

४५. दासो ऽहं गुरुदेवस्य गुरुदेवे च भक्तिमान्
नहीच्छामि नहीच्छामि स्वर्गं वापि गुरुं विना

४६. यथा पूज्यतमो देव स्तथा देवगणा अपि
तथैव गुरुणा साकम् पूजार्हा हि गुरोर्जनाः

४७. वित्तं गुरुपद द्वन्द्वम् चित्तं मे गुरुपादयोः
सर्वं गुरुकृपायत्तम् तस्मै श्रीगुरवे नमः

४८. विश्वदर्शी गुरुर्देव शिशष्याणां विश्वदर्शकः
गुरुदर्शनमात्रेण करस्थं दृश्यते जगत्

४९. हरिश्शेते शेषतल्पे हरः पन्नगभूषणः
गुरुश्शेते शिष्यचित्ते नित्यं वात्सल्यभूषणः

५०. मन्दारो नास्ति भूलोके कामधेनुर्न वर्तते
तथापीह न मे चिन्ता ममास्ति गुरुरित्यलम्

41. The man who adores the master who blessed him with the light of knowledge becomes rich. But he who discards the light of wisdom or the master who gave it would be a loser in all aspects.

42. The master through whom I have got the culture, acquired the gift of greate poetry and scholarship in literature, I prostrate before him and worship him.

43. Lord Indra takes up the indomitable weapon to kill the wicked demon. Where as the master takes up the sword of knowledge to dispel the dark clouds of ignorance in his disciple.

44. There may a black sheep among disciples but not among the masters. Does not tree give its shade and comfort to the man who comes to cut it down!

45. I am subservient to the master.I have devotional faith in him. I don't aspire for heaven, leaving my master, no I don't.

46. Just as God and his retinue are worshipful, the master and his associates are worshipful.

47. The feet of my master are my wealth. My mind always contemplates his feet. What all that belongs to me, I have got from my master by his grace. To such a master my salutation belong.

48. The master divine has visualized the world. The world he has seen, he has shown it to his disciples. Hence by mere seeing the master one can see the entire world as if in a mirror.

49. Lord Vishnu reclines on a snake. Lord Siva wears a snake around his neck as an ornament. But the master sleeps in the minds of his disciples. His compassion for the disciples he wears it as his ornaments.

50. There is no ever yielding tree much less an ever giving milch cow. Yet I am not sad Enough,I have got my master.

५१. तृणखादनमात्रेण दीयते हि पयो गवा
नम्रतापरितुष्टेन गुरुणा दीयते सुधा

५२. पयः पीत्वा विषं दत्वा मोदते खलु पन्नगः
शिष्यदौष्ट्यविषं हृत्वा गुरुणा दीयते सुधा

५३. गुरुं नौमि गुरुं नौमि गुरुं नौमि निरन्तरम्
स्मरणं गुरुदेवस्य जन्मसाफल्यकारणम्

५४. वज्रं वज्रान्तरेणैव घट्टितं हि प्रकाशते
गुरुचित्ताब्जपत्रेण शिष्यवज्रं प्रकाशते

५५. इन्धनम् पावको भुक्तवा वर्धतेच प्रकाशते
तथैव शिष्यलोकस्य गुरुजीवनमिन्धनम्

५६. नाभिजानाम्यहम् मन्त्रम् नाभिजानामि तान्त्रिकम्
गुरुं जाने गुरोराशीर्बलं जानाम्यहर्निशम्

५७. गुरुचित्तम् महापद्मम् तत्र तिष्ठति भारती
गुरु हीनं नरं वाणी परित्यजति दूरतः

५८. गुरुणोक्तं वचो मन्त्रो गुरुसेवाह्युपासना
वैकुण्ठं गुरु सान्निध्यम् गुरुवन्दनमाचरेत्

५९. रक्षणं शिष्टलोकस्य शिक्षणं च खलात्मनाम्
भगवल्लक्षणं प्रोक्तम् गुरू रक्षति केवलम्

६०. सदृशं नवनीतेन गुरोश्चित्तं न संशयः
तप्तंच घृतरूपेण सेव्यते हि बुभुक्षुभिः

51. The cow is satisfied by eating grass and gives milk. The master who rejoices in his disciples remaining faithful to him gives them in return, nectar.

52. The snake drinks milk but emits poison and feels happy. But the master sucks out the poison in the corners of the heart of his disciples and swallows it and instead gives them nectar.

53. I salute, I salute, I ever salute my master. The contemplation of the master fructifies life.

54. By honing a diamond with another diamond it makes it bright and shiny. But he with his mental petals of lotus brightens his diamond - like disciples.

55. Fire consumes oil and burns and glows. In the same way the master uses his life as oil for the progress and illumination of his disciples.

56. I do not know magic and mesmerism. But I know the master. I am conscious of the potency in the blessings of the master.

57. The mind of the master is a great lotus. Saraswathi, the goddess of knowledge dwells in it. She discards the disciple who has no master.

58. The word of the master is magical.To serve the master is worshipping the God. To remain in the presence of the master is to remain with Vishnu. Therefore the master is to be saluted.

59. To punish the wicked and save righteous men are the characterstics attributed to God. But the character of the master is only to save.

60. The mind of the master is like butter.Even after it is heated, it becomes ghee and will be consumed by him who desires it.Similarly the master is harnessed by his disciples and he becomes more useful to them.

६१. तारा स्सहस्रश स्सन्तु शशिना भाति यामिनी
बान्धवा बहव स्सन्तु गुरुणा भाति जीविका

६२. गुराव़सत्यवादीच तथैव गुरु वञ्चकः
माभूच्छक्रो ऽ पि तत्पापं परिहर्तुमलं नहि

६३. देवस्य रामचन्द्रस्य कृष्णस्यापि जगद्गुरोः
सन्त्येव गुरवस्तस्मा न्नकदापि गुरुं त्यजेत्

६४. जिह्वाग्रे गुरुदेवस्य वर्तते या सरस्वती
तस्याः कृपाविशेषेण लोको ऽ यं वर्धते सदा

६५. गुरु भूषणशीलेन भूषिता भाति भारती
गुरुदूषणशीलेन वाणी भवति दूषिता

६६. वैकल्यं जायते चित्ते यदा यस्य तदा स हि
गुरुमेवाश्रयेन्नोचेद् व्यसनेषु पतिष्यति

६७. रामायणकथाकाव्य स्रष्ट्रा वाल्मीकिनापि च
नारदो गुरुरूपेण प्रस्तावित इति स्मरेत्

६८. सन्ध्य़यो श्शान्त रूपो ऽ र्को मध्याह्ने चण्डभानुमान्
गुर्वर्क स्सर्वकालेषु शान्त एवाभिदृश्यते

६९. राकायां कान्तिमान् पूर्णो दर्शेतु नहि दृश्यते
चन्द्रमा गुरुचन्द्रस्तु शोभते हृदि नित्यशः

७०. गुरुरेव पिता माता गुरुर्बन्धु र्गुरुस्सखा
गुरुर्देवो जगत् सर्वम् गुरुरेवाभिदृश्यते

61. The starlit sky shines bright with the light of the moon in the nights. So also, though there are kith and kin, life blossoms only on account of the teacher.

62. Do not tell lies to the master. Do not try to undermine him. Even Lord Indra is not capable of erasing that sin.

63. Lord Sri Ram Chandra and Sri Krishna preceptors of the universe had their own teachers as we know. Hence the teacher is indispensable.

64. The world does ever proper with the blessings of the goddess Saraswathi who by herself improves on the tongue-tip of the master-god.

65. Adoring the master amounts to adroing the Goddes Saraswati. Ridiculing the master tantamounts to ridiculing the goddess of knowledge.

66. Whenever anybody is mentally disturbed he should immediately seek the guidance of the master. If not he would succumb to vices.

67. Valmiki the father of classical poetry, the creator of the story Ramayanam mentioned in the beginning of the book that Narada was his master should be rembered.

68. Though in the morning and in the evening during dusk time the sun looks cool and calm, at noon time it turns terribly hot and shines bright. But the master-sun looks placid at all times.

69. On fullmoon day, the moon shines bright. On new moon day it does not appear at all. But the master ever shines bright in the hearts of disciples. The disciple who speaks lies with his master is sure to be doomed.

70. The master is all in all, a mother,a father, a relative, a friend and a god. It appears the whole world is filled with the master.

७१. सत्यलोके स्थितो ब्रह्मा सत्ये गुरुकृपा स्थिता
असत्यभाषणा च्छिष्यो ब्रह्मद्रोही नसंशयः

७२. सत्या विद्या गुरुप्रोक्ता यया शिष्यो ऽ भिवर्धितः
तस्मा उक्त्वा मृषा वाक्यम् गुरवे स विनश्यति

७३. सत्यमेवहि वक्तव्यम् गुरवे ज्ञानदायिने
येनासत्यं गुरोः प्रोक्तम् तस्य श्रेयो विनश्यति

७४. गुरुदेवार्चनं सत्यम् सत्यं शिष्यविभूषणम्
सत्यं विना गुरौ भक्ति र्नूनं भवति वञ्चना

७५. यज्ज्ञानं जीवनाधारम् वर्धते येन सद्यशः
तद्विज्ञानप्रदातारम् गुरुदेवं न विस्मरेत्

७६. आचार्यभास्करं वन्दे यस्य ज्ञानगभस्तिभिः
स्थितं मे मानसक्षेत्रे तमो धावति दूरतः

७७. गुरुं चन्द्रमसं वन्दे योहि वात्सल्य चन्द्रिकाम्
अज्ञानतापतप्तं मे दत्वा रक्षति शीतलाम्

७८. अनेके जन्तवो लोके तेषां मध्ये नरो घनः
घनता कारणं ज्ञानम् तद्दातारम् गुरुम् स्मरेत्

७९. नाविष्णुरर्चयेद् विष्णुम् नारुद्रो रुद्रमर्चयेत्
शिष्यस्तु शिष्यभावेन गुरुवन्दनमाचरेत्

८०. प्रथमं शिष्यभावेन गुरुपादसरोरुहम्
ध्यात्वा ह्यनन्तरं रुद्रं रुद्रभावेन पूजयेत्

71. Brahma lives in the world of truth.The benevolance of the master is enveloped with truth. The disciple who speaks untruth to his master is the betrayer of Brahma. No doubt about it.

72. The knowledge imparted by master is truthful.With that truth only the disciple grows up in life.The disciple who speaks lies with his master is sure to be doomed.

73. One should speak truth only with his master. The man who speaks falsehood with his master is bound to decay.

74. Truth only is the best offering to the master. Truth only is the ornament for the disciple. It is nothing but betrayal if a man discards truth but worships his master.

75. One should never forget his master who bestows knowledge to live and from which knowledge and reputation multiply.

76. I salute the master-sun, an embodiment of glowing wisdom, who dispels ignorance of darkness from my mental domain with his rays of brightness of wisdom.

77. I salute the master who is like a kind moon saves me by showering his pleasant moon light on me when I am tortured and struggling by hotness of ignorance.

78. There are countless number of animals in this world. Out of all of them man is great. The reason for that greatness is knowledge. The master who is responsible for granting such knowledge is worth remembering.

79. He who has no concept of Vishnu should not worship Vishnu. He who has no knowledge of Rudra, should not worship Rudra. That means after realising and identifying man and god as one, should worship God. But while worshiping the master the disciple should think that he is mearly a disciple.

80. One should first contemplate on the lotus feet of the master and then think as if he is Rudra and then worship Him.

८१. अपराधशतं वापि सहते क्षमया गुरुः
स एव क्षुभ्यते दृष्वा स्वप्लामपि कृतघ्नताम्

८२. गुरोर्मौनमपि व्याख्या किमु तस्यहि भाषणम्
वाक्यं हि गुरुणा प्रोक्तं भावयेद् प्रणवात्मकम्

८३. गुरुणा जायते ज्ञानं धनं ज्ञानेन लभ्यते
धनेन लभते सौख्यं सुखमूलं गुरुं स्मरेत्

८४. जननी जन्मभूमिश्च स्वर्गादपि गरीयसी
इति ज्ञानम् येन लब्धम् तस्मै श्रीगुरवे नमः

८५. भूतकालिकविज्ञानं वर्तमानगतिस्तथा
भविष्यद्दर्शनंचैव लभते कृपया गुरोः

८६. सद्गुरु श्शंकराचर्यो मुनिर्व्यासो जगद्गुरुः
तयोर्गुरु र्जगन्नाथ स्तत्त्रयम् स्वगुरौ स्थितम्

८७. गुरुर्बृहस्पतिस्स्वर्गे शुक्राचार्यो रसातले
नराणां गुरुहीनानां का गतिः परिदृश्यते

८८. भ्रमति भ्रमरो भूत्वा गुरुपादारविन्दयोः
पीत्वा तज्ज्ञानपीयूषम् चित्तं मे परितुष्यति

८९. येन मे कविता लब्धा तया तदभिपूजनम्
पावनं भवरोगघ्नम् क्रियते गुरुवन्दनम्

९०. प्रदत्तं येन वैदुष्यम् भाषयो स्संस्कृतान्ध्रयोः
स एवहि ममाराध्यः क्रियते गुरुवंदनम्

81. Though the disciple has done hundred wrongsthe master endures his wrongs. But, on the other hand, if he shows a little ingratitude towards his master the master's mind will be grieved. Therefore one should not under any circumstances show disrespect towards his master.

82. The silence of a master is also said to be a big comment. If that is so, how great will be his word! Therefore every sentence that comes out from the mouth of a master must be regarded as one equal to PRANAVA.

83. Knowledge comes from the master. Wealth comes from the knowledge; wealth gives happiness. One should therefore, remember that because the master is the cause for happiness he should be remembered.

84. From whom I got knowledge that the mother who has given birth to me and the mother-earth are greater than heaven to him my master, I salute.

85. The knowledge of the past, the trend of things at present, the vision of the future are obtained by the blessings of the master.

86. Sankaracharya is a worthy master. Sage Vyasa is the universal master. The master for both of them is lord Jagannadha. These three manifest themselves in the self of my master.

87. When Brihaspati in heaven and Sukracharya in the hedes were acting as masters and mankind was deprived of a master, what would be their fate?

88. As a butterfly my heart rejoices in drinking the knowledge of nectar from the lotus feet of my master.

89. From the master from whom poetic talent comes, it is a pious deed if with the same poetic talent the sea of troubles in life are overcome. In this way I salute my master.

90. Is he who blessed me with scholarship both in Telugu and Sanskrit is not my master! That is why I am saluting my master.

९१. गुरोरसत्य वादीच यश्च प्रोत्सहते ऽ नृतम्
तस्य नास्ति भुवि श्रेयो नास्ति तस्य परा गतिः

९२. माता पूज्या पिता पूज्यो गुरुः पूज्यो निरंतरम्
तद्द्वेषी देवभक्तो ऽपि क्षयं प्राप्नोत्यसंशयः

९३. नेत्रे हि पश्यतो लोकम् समीपे यच्च वर्तते
तृतीयं गुरुदत्ताक्षि सर्वं सर्वत्र पश्यति

९४. असत्ये भौतिके लोके सत्यदार्शनिको गुरुः
सत्यमेव गुरो रूपम् गुरोस्सत्यं समाचरेत्

९५. शिवाय गुरुरूपाय गुरवे शिवरूपिणे
यः करोति नमस्कारम् स एव लभते जयम्

९६ साक्षात्कार स्सरस्वत्या गुरोर्भिक्षा न संशयः
भिक्षां स्वीकृत्य जन्मान्तम् कृतज्ञ स्स भवेद् गुरौ

९७. गुरुर्यज्ञ स्सोमयाजी गुरुर्हव्यंच तत्फलम्
गुरुं त्यक्त्वा कृतो यज्ञो निष्फलं नात्र संशयः

९८. गुरुदेवस्य विज्ञानम् जीवितानुभवस्तथा
श्रेयसे शिष्यलोकस्य तस्मान्नित्यं गुरुं स्मरेत्

९९. गुरुं नत्वा सदा भक्त्या श्रेयः प्राप्नोत्यनुत्तमम्
गुरुं हित्वा लोभबुद्ध्या क्षयं प्राप्नोत्यहर्निशम्

१००. गुरुप्रशंसा पुण्याय पापाय गुरुदूषणम्
गुरुपीडोद्भवं पापम् यज्ञेनापि न नश्यति

91. The man who speaks lies with his master and instigates others to speak lies with the master will not be profited. Besides that, he will not have better future after death.

92. A mother is an ever respectable person. So also father and master. A man who has hatred towards his parents, though a devote of god, is no doubt sure to perish.

93. Our eyes can see the world only what is near about. But the third eye of knowledge given by the master can visualize the entire universe.

94. It is the master who can make us see truth, this transitory physical world. Truth in fact is the figurative form of the teacher. Therefore one should ever speak truth before the teacher.

95. He who can see Shiva in his master and his master in Shiva and worship him alone succeeds in life.

96. It is a charity on the part of the master who can see the manifestation of the goddess of knowledge. He who has enjoyed such charity should be thankful towards his master till the end of his life.

97. The master is YAJNA, the master is he who has performed YAJNA. The master himself is the oblation. He is the fruit of YAJNA. There is no doubt that only YAJNA done ignoring the master will be useless.

98. The wisdom of the master and his life experiences will be useful for the welfare of his student-world. Therefore the disciples should ever keep their mind on their master.

99. The disciple who salutes his master with devotion and obtains from him the best fruit of it. If any one out of the selfishness discards his master will be a perpetual loser.

100. To speak in praise of the master is a blessing. And it is but a sin if one speaks ill of the master. The sin incurred by teasing a master can not be obliterated even by performing YAJNA.

